तस्मादिदं कर्म शिष्टाः कुर्वन्ति व्यष्टिरूपतः ॥१०१

कर्मारम्भस्तत्समाप्ति र्वैतद्दिवसे भवेत् ।
क्रियामध्ये तु तत्कर्तुस्तत्पत्न्या देशिकस्यच ॥१०२॥

आशौचाद्यन्तरायश्चेत् स्विष्टं कर्म तदन्ततः ।
कुर्यादतो व्यष्टिरेव कार्या सन्तानसिद्धये ॥१०३॥

यजमानोथ तत्पत्न्यै क्रमात्संपातमादितः ।
दद्यात् ऋग्जपपूर्वं तु सा तत्प्राश्य ततः परम् ॥१०४॥

तेनैवाश्वत्थपत्रेण कुम्भतोयं पिबेत्क्रमात् ।
एवं प्रतिदिनं कुर्यात्सम्पातप्राशनं तथा ॥१०५॥

प्रतिमायुगलश्चैव कुम्भयुग्मं सदक्षिणम् ।
वस्त्रयुग्मं च विप्रेन्द्रा होमान्ते षोडशे दिने ॥१०६॥

आचार्याय वै दद्यात् जीवसन्तानसिद्धये ।
ब्राह्मणान्भोजयेत्पश्चात् षड्रसैः क्रोधवर्जितः ॥१०७॥

आशीर्वादं भोजनान्ते कुर्याद् ब्राह्मणदक्षिणाः ।
यथाशक्ति दिशेत्पश्चादाचार्याय विशेषतः ॥१०८॥

सम्भावनां तथा तोषं गोवस्त्रादिसमन्वितम् ।
छन्दोगानां बह्वृचानां कुर्यात् स्विष्टकृदादयः ॥१०९॥

औत्तरं तंत्रके स्वस्व सूत्रेणैव मुनीश्वराः ।
अथवाचार्य सूत्रेण कुर्यात्पुंसवनं सुधीः ॥११०॥



दिनानि षोडशैवं वै कृत्वा पश्चात्परेहनि ।
कुर्याद्धोमं बिना सूर्यं प्रतिमां च बिना मुदा ॥१११॥

गोधूमतण्डुले प्रस्थयुग्मके सूर्यपूजनम् ।
त्रिकालपूजा तत्पश्चात्तद्दानञ्च समाचरेत् ॥११२॥

प्रस्थद्वयमिते जीवच्याने धेनुं निधाय च ।
सवत्सां पूजयेद्विप्राः सन्तान तिलहोमवत् ॥११३॥

ततो नूतनवस्त्राणि जायापति घृतानि वै ।
हरिद्राक्तानि दीपार्घ्यपात्रयुक्तानि मोदतः ॥११४॥

आचार्यायैव देयानि नान्यस्मै पुत्रसिद्धये ।
आचार्येणैव वैलेख्यं नित्यं पुंसूक्तयंत्रकम् ॥११५॥

अन्येन लिखितं चेत्स्यात् सह पत्न्यात्मनाशनम् ।
उत्तानपादश्च महानिदं कृत्वाप्तवान् ध्रुवम् ॥११६॥

मार्कंडेण्यं च तत्तात जयन्तं च शचीपतिः ।
कीर्तिमान् तनयं लेभे चैतत्कर्मप्रभावतः ॥११७॥

बहुनात्र किमुक्तेन संग्रहेण वदाम्यहम् ।
मरीच्यादिमुनिश्रेष्ठा राजानश्चाप्यजादयः ॥११८॥

लब्ध्वाच्युतसमान्पुत्रान् लेभिरेन्तेच्युतालयम् ।
ऋष्यशृङ्गेण कथितमिदं पुंसवनं नराः ॥११९॥

येकुर्वन्ति नरश्रेष्ठास्ते भवेयुः सपुत्रिणः ।
लब्ध्वेह सकलान्भोगान्प्राप्न्युयुर्हरिमन्ततः ॥१२०॥

इत्यादि सनत्कुमारसंहितायमुत्तरभागे ऋष्यश्रृङ्गोक्तसन्तान-
यागविधिर्नामाष्टसप्ततितमोऽध्यायः समाप्तः ॥

## अथ ऋग्विधानोक्तसन्तानयागः

शुक्लपक्षे शुभेवारे सुनक्षत्रेसुगोचरे ।
द्वादश्यां पुत्रकामाय चरुं कुर्वीत वैष्णवम् ॥१॥
दपत्योरुपवासः स्यादेकादश्यां सुरालये ।
ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम् ॥२॥
चरुं पुरुषसूक्तेन श्रपयेत्पुत्रकाम्यया ।
प्राप्नुयाद्वैष्णवं पुत्रमचिरात्सन्ततिक्षमम् ॥३॥
द्वादश द्वादशीः सम्यक् पयसा निर्वपेच्चरुम् ।
यः करोतिहयस्थस्याद्याति विष्णोः परंपदम् ॥४॥
हुत्वाग्निं विधिवत्सम्यगृग्भिः षोडशभि र्बुधः ।
कृताञ्जलिपुटोभूत्वा स्तवन्ताभिः प्रयोजयेत् ॥५॥
केशवंमार्गशीर्षे तु पौषेनारायणं तथा ।
माधवं माघमासे तु गोविन्दं फाल्गुने पुनः ॥६॥
चैत्रे चैव तथाविष्णुं वैशाखे मधुसूदनम् ।
ज्येष्ठे त्रिविक्रमं विद्यादाषाढे वामनं विदुः ॥७॥



श्रावणे श्रीधरं विद्याद् हृषीकेशं ततः परे ।
आश्विने पद्मनाभं तु दामोदरं च कार्तिके ॥८॥
द्वादशैतानि नामानि ऋष्यशृङ्गोऽब्रवीन्मुनिः ।
पूजयेन्मासनामभिः सर्वान्कामान्समश्नुते ॥९॥
आयुष्मन्तं सुतं सूते परामेधासमन्वितम् ।
धनवन्तं प्रजावन्तं धार्मिकं सात्विकं तथा ॥१०॥
समिधोऽश्वत्थवृक्षस्य हुत्वाग्निं जुहुयात्पुनः ।
उपस्थानं हुताशस्य ध्यात्वाच्यंमधुसूदनम् ॥११॥
हविर्होमं ततः कुर्यात्प्रत्यृचं वाग्यतः शुचिः ।
सूक्तेन जुहुयादाज्यमादावन्ते च पूर्ववत् ॥१२॥
हविःशेषं नमस्कृत्य नारी नारायणं पतिम् ।
भक्षयित्वा हविःशेषं लब्धाशीः संविशेत्क्षणम् ॥१३॥
ततस्तु कृत्वेदं कर्म कर्त्तव्यं द्विजतर्पणम् ।
द्वितीयं स्त्री निवर्तेत यावद्गर्भं च विन्दति ॥१४॥
अपुत्रा मृतपुत्रा वा या च कन्या प्रसूयते ।
क्षिप्रं सा जनयेत्पुत्रं ऋष्यश्रृङ्गो यथाब्रवीत् ॥१५॥
अर्चनं संप्रवक्ष्यामि विष्णोरमिततेजसः ।
यत्कृत्वा मुनयः सर्वे ब्रह्मनिर्वाणमाप्नुयुः ॥१६॥
अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ।

षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम् ॥१७॥
अग्नौ क्रियावतां देवो दिवि देवो मनीषिणाम् ।
प्रतिमा स्वल्पबुद्धीनां योगिनां हृदये हरिः ॥१८॥
आपो ह्यायतनं तस्य तस्मात्तासु सदा हरिः ।
तस्य सर्वगतत्वाच्च स्थण्डिले भावितात्मनाम् ॥१९॥
दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥२०॥
आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता ।
पुरुषोऽस्य जगद्बीजमृषिर्नारायणः स्मृतः ॥२१॥
नारायण महाबाहो शृणुष्वैकं महाप्रभो ।
वक्ष्ये पुरूषसूक्तस्य विधानं त्वर्चनं प्रति ॥२२॥
अग्निकार्यं जपविधिं स्तोत्रं चैव तदात्मकम् ।
स्नात्वा यथोक्तविधिना प्राङ्मुखः शुद्धमानसः ॥२३॥
प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे ।
तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत् ॥२४॥
पञ्चमीं वामजानुनि षष्ठीं वै दक्षिणे न्यसेत् ।
सप्तमीं वामकुक्षौ तु अष्टमीं दक्षिणे न्यसेत् ॥२५॥
नवमीं नाभिदेशे तु दशमीं हृदये न्यसेत् ।
एकादशीं कण्ठदेशे द्वादशीं वामबाहुके ॥२६॥



त्रयोदशीं दक्षिणे च आस्ये चैव चतुर्दशीम् ।
अक्ष्णोः पञ्चदशीं चैव षोडशीं मूर्ध्नि विन्यसेत् ॥२७॥
एवं न्यासविधिं कृत्वा पश्चात्पूजां समारभेत् ।
यथा देहे तथा देवे न्यासं कृत्वा विधानतः ॥२८॥
आद्ययावाहयेद्देवमृचा तु पुरुषोत्तमम् ।
द्वितीययासनं दद्यात्पाद्यं चैव तृतीयया ॥२९॥
अर्घ्यं चतुर्थ्या दातव्यं पञ्चम्याचमनीयकम् ।
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव तु ॥३०॥
यज्ञोपवीतमष्टम्या नवम्या चानुलेपनम् ।
पुष्पं दशम्या दातव्यमेकादश्या तु धूपकम् ॥३१॥
द्वादश्या दीपकं दद्यात्त्रयोदश्या निवेदनम् ।
चतुर्दश्या नमस्कारं पञ्चदश्या प्रदक्षिणाम् ॥३२॥
षोडश्योद्वासनं कुर्याद्देवदेवस्य चक्रिणः ।
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम् ॥३३॥
ततः प्रदक्षिणां कृत्वा जपं कुर्यात्समाहितः ।
यथाशक्ति जपित्वा तु सूक्तं तस्मै निवेदयेत् ॥३४॥
देवस्य दक्षिणे पार्श्वे कुण्डं स्थण्डिलमेव वा ।
ततः कारयेत्प्रथमेनैव द्वितीयेन तु प्रोक्षणम् ॥३५॥
तृतीययाग्निमादध्या चतुर्थ्या च समिन्धनम् ।

पञ्चम्याज्यस्य श्रपणं चरोश्च श्रपणं तथा ॥३६॥
षष्ठे नैवाग्निमध्ये तु कल्पयेत्पद्ममासनम् ।
चिन्तयेद्देवदेवेशं कालानलसमप्रभम् ॥३७॥
ततो गन्धं च पुष्पं च धूपदीपनिवेदनम् ।
अनुज्ञाप्य ततः कुर्यात्समम्यादि यथाक्रमम् ॥३८॥
समिधस्तावतीः पूर्वं जुहुयादभिधारिताः ।
ततोघृतेन जुहुयाच्चरुणा च ततः पुनः ॥३९॥
एवं हुत्वा ततश्चैवमनुज्ञाप्य यथाक्रमम् ।
अग्नेर्भगवतस्तस्य समीपे स्तोत्रमुच्चरेत् ॥४०॥
जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
सुब्रह्मण्य नमस्तेस्तुमहापुरुषपूर्वज ॥४१॥
नमो हिरण्यगर्भाय प्रधानाव्यक्तरूपिणे ।
ओं नमो वासुदेवाय शुद्धज्ञानस्वरूपिणे ॥४२॥
देवानां दानवानां च सामान्यमसि दैवतम् ।
सर्वदाचरणद्वन्द्वं व्रजामि शरणं तव ॥४३॥
एकस्त्वमसिलोकस्य स्रष्टा संहारकस्तथा ।
अव्यक्तश्चानुमन्ता च गुणमायासमावृतः ॥४४॥
संसारसागरं घोरमनन्तक्लेशभाजनम् ।
त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॥४५॥



न ते रूपं न चाकारो नायुधानि नचास्पदम् ।
तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥४६॥
नैवकिञ्चित्परोक्षं ते न प्रत्यक्षोसि कस्यचित् ।
नैव किञ्चदसाध्यं ते न च साध्योसिकस्यचित् ॥४७॥
कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ।
योगिनां परमां सिद्धिं विन्दन्ति परमं विदः ॥४८॥
अहं भीतोस्मि देवेश संसारेऽस्मिन्महाभये ।
त्राहि मां पुण्डरीकाक्ष न जाने परमं पदम् ॥४९॥
कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ।
शरीरे च गतौ वापि वर्तते मे महद्भयम् ॥५०॥
त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वपि ।
निमित्तं कुशलस्यास्ति एवं गच्छामि सद्गतिम् ॥५१॥
ज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमर्जितम् ।
जन्मान्तरेपि मे देव माभूदस्य परिक्षयः ॥५२॥
दुर्गतावपि जातस्य त्वद्गतो मे मनोरथः ।
यदि नाथं न विन्देयं तावतास्मि कृती सदा ॥५३॥
अकामकलुषं चित्तं ममते पादयोः स्थितम् ।
कामये विष्णुपादौ तु सर्वजन्मसु केवलम् ॥५४॥
पुरुषस्य हरेः सूक्तं स्वर्ग्यं धन्यं यशस्करम् ।
आत्मज्ञानमिदं पुण्यं योगज्ञानमिदं परम् ॥५५॥

इत्येवमनया स्तुत्या स्तुत्वा देवं दिने दिने ।
किङ्करोस्मीति चात्मानं देवायैव निवेदयेत ॥५६॥

फलाहारो भवेन्मासं पश्यत्यात्मानमात्मनि ।
फलानि भुक्त्वोपवसेन्मासमद्भिश्च वर्तयेत् ॥५७॥

अरण्ये निवसेन्नित्यं जपन्नेतमृषि सदा ।
त्रिस्त्रिषवणकालेषु स्नायादप्सु समाहितः ॥५८॥

आदित्यमुपतिष्ठेत सूक्तेनानेन नित्यशः ।
आज्याहुतीरने नैव हुत्वैतं चिन्तयेदृषिम् ॥५९॥

ऊर्ध्वं मासात्फलाहारात्रिभिर्वर्षैर्जयेद्दिवम् ।
तद्भक्तस्तन्मनायुक्तो दशवर्षाण्यनन्यभाक् ॥६०॥

साक्षात्पश्यति तं देवं नारायणमनामयम् ।
ग्राह्यमत्यन्तयत्नेन त्वष्टारं जगतोऽव्ययम् ॥६१॥

गृहस्थधर्मे वर्तेत न्यायवृत्तः समाहितः ।
एतदेवं चिन्तयेत नारायणमनामयम् ॥६२॥

अतिपातकसंयुक्तं कालेन सुकृतीभवेत् ।
येन येन च कामेन जपेदिमं ऋषिं सदा ॥६३॥

स सकाम समृद्धः स्याच्छ्रद्दधानस्य कुर्वतः ।
होमं वाप्यथवा जाप्यमुपहारमथो चरुम् ॥६४॥

कुर्वीत येन कामेन तत्सिद्धिमवधारयेत् ।
ज्ञातिश्रैष्ठ्यं महद्वित्तं यशोलोके परांगतिम् ॥६५॥



पापेन विप्रमोक्षस्तु तत्सिद्धिमवधारयेत् ।
ज्ञानगम्यं परं सूक्ष्मं व्याप्य सर्वं व्यवस्थितम् ॥६६॥

ग्राह्यमत्यन्तयत्नेन ब्रह्माभ्येति सनातनम् ।
सहस्रशीर्षेति सूक्तं सर्वकामफलप्रदम् ॥६७॥

वेदगर्भशरीरेण स वै नारायणस्मृतः ।
ब्रह्मेन्द्ररुद्रपर्जन्या अत्र सूक्ते व्यवस्थिताः ॥६८॥

अत्रस्थमेतद्द्रष्टव्यं जगत्स्थावरजङ्गमम् ।
अतः संपठ्यमानोपि भक्तिं न परिहारयेत् ॥६९॥

भक्तानुकम्पी भगवान् श्रयते पुरुषोत्तमः ।
पूजार्थं तस्य देवस्य बनात्स्वयमुदाहृतात् ॥७०॥

आरण्यकविधानेन निर्वपेत्प्रत्यहं चरुम् ।
नारायणाय स्वाहेति मंत्रान्ते जुहुयाद्धविः ॥७१॥

आसहस्राच्चतश्चाक्षुर्दिव्यं होतुर्ददाति सः ।
अपित्राचरुसाहस्रं तंत्रेणैकेन निर्वपेत् ॥७२॥

यावन्तो वापि शक्यन्ते अह्ना सर्वान्समापयेत् ।
सहस्रस्येप्सितानां च कामानां लभते फलम् ॥७३॥

पुरुषायुः समायुक्तः सिद्धोवापि चरेन्महीम् ॥७४॥

एतत्तु यः पठति केवलमेव सूक्तं नारायणस्यचरणावभिवन्द्यनित्यम् पाठेन तेन परमेण सनातनस्य स्थानं जरामरणवर्जितमेवविष्णोः ॥७५॥

हविषाग्नौ जले पुष्पै ध्यानेन हृदये हरिम् ।
यजन्ति सूरयो नित्यं जपेत रविमण्डले ॥७६॥
बिल्वपत्रं शमीपत्रं भृङ्गारकस्य च ।
मालती कुशपद्मं च सद्यस्तुष्टिकरं हरेः ॥७७॥
यत्रैतत्पठ्यते किंचित्तद्ध्यायेन्मनसैव तु ।
संपाद्य तत्प्रसादाच्च देवदेवस्य चक्रिणः ॥७८॥
पत्रैश्च पुष्पैश्च फलैश्च तोयैरक्रीतलब्धैश्च सदैव सत्सु ।
भक्त्यैकलभ्ये पुरुषे पुराणे मुक्त्यै किमर्थं क्रियते तु यत्नः ॥७९॥

इत्येव मुक्तः पुरुषस्य विष्णोरर्चाविधिं विष्णुकुमारनाम्ना ।
मुक्त्यैकमार्गं प्रतिबोधनाय दृष्ट्वा विधानं त्विहनारदोक्तम् ॥८०॥ इति

पुत्रार्थे शालिबीजेन धनार्थे बिल्वपत्रकैः ।
दूर्वाभिरायुष्कामस्तु पुष्टिकामस्तु वेतसैः ॥
कन्याकामस्तु लाजाभिः पशुकामो घृतेन तु ।
विद्याकामस्तु पालाशैर्दशांशेन तु होमयेत् ॥
धान्यकामो यवैश्चैव गुग्गुलेनरिपुक्षये ।
तिलैरारोग्यकामस्तु व्रीहिभिः सुखमश्नुते ॥ तंत्रसा० ॥

पुत्रकामः पुरुषसूक्तेन तर्पणं मार्जनं च कृत्वा श्रीवैष्णवान् भोजयेदिति ग्रन्थविस्तारभयादधिकं न लिख्यते ।



अर्थानुसन्धानपुरस्सरम् भगवतो नारायणस्य षोडशर्चस्य पुरुषसूक्तस्य न्यासं पाठं पूजां होमं तर्पणं मार्जनं श्रीवैष्णवाराधनं च कुर्वन् श्रीवैष्णवः इह पुत्रादिसकलसौभाग्यनिधानं परत्र परमसुखभाजनं भवतीति सर्वत्र सर्वमङ्गलम् ।

॥ इति पुरुषसूक्तपुरश्चरणं सम्पूर्णम् ॥

## अथ पुरुषसूक्तमाहात्म्यम्

तावावां परमे व्योम्नि पितरौ जगतः परौ ।
अनुग्रहाय लोकानां स्थितौ स्वः परया श्रिया ॥
( लक्ष्मीतंत्र० श्लो० १॥ )

कदाचित्कृपयाविष्टौ जीवानां हितकाम्यया ।
सुखिनः स्युरिमे जीवाः प्राप्नुयुर्नौ कथं त्विति ॥२॥
उपायान्वेषणे यत्तौ परमेण समाधिना ।
मथ्नावस्त्वतिगंभीरं शब्दब्रह्ममहोदधिम् ॥३॥
मथ्यमानाच्चतस्तस्मात्सामर्ग्यजुषसंकुलात् ।
तत्सूक्तमिथुनं दिव्यं दध्नो घृतमिवोत्थितम् ॥४॥
इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते ।
ऋतं सत्यञ्च विख्यातमृषिसिंहेन चिन्तितम् ॥
( व्यास० ५ )

ब्रह्मयज्ञे जपन् सूक्तं पुरुषं चिन्तयन् हरिम् ।
स सर्वान् जपते वेदान् साङ्गोपाङ्गान्विधानतः ॥
॥ विष्णुधर्मोत्त० ६॥

वेदेषु पौरुषं सूक्तं पुराणेषु च वैष्णवम् ।
भारते भगवद्गीता धर्मशास्त्रेषु मानवम् ॥ पाद्म० ७ ॥
पौरुषं सूक्तमावर्त्य मुच्यते सर्वकिल्बिषात् ॥ यम० ८ ॥
दद्यात्पुरुषसूक्तेन आपः पुष्पाणि चैव हि ।
अर्चितं स्यादिदं तेन विश्वं भुवनसप्तकम् ॥पराशर० ९॥
प्रतिवेदं महाभाग यत्सूक्तं पौरुषं स्मृतम् ।
सर्वकर्मकरं पुण्यं पवित्रं पापसूदनम् ॥पुष्कर० १०॥
एकैकया ऋचा राम स्नातो दत्वा जलाञ्जलीन् ।
पौरुषेण च सूक्तेन मुच्यते सर्वकिल्बिषात् ॥११॥
अन्तर्जलगतो जप्त्वा तथा सूक्तं तु पौरुषम् ।
सर्वकल्मषनिर्मुक्तो यथेष्टां लभते गतिम् ॥१२॥
अकामः पौरुषं सूक्तं जप्त्वा नित्यमतन्द्रितः ।
नरो याति महाभाग तद्विष्णोः परमं पदम् ॥१३॥
पुरुषस्य हरेः सूक्तं स्वर्ग्यं धन्यं यशस्करम् ।
आत्मज्ञानमिदं पुण्यं योगज्ञानमिदं परम् ॥१४॥शौनकस्मृ०
धृतोर्ध्वपुण्ड्रः परमेशितारं नारायणं पूजयति स्वभक्त्या ।
अर्घ्यादिभिः पौरुषसूक्तमंत्रैः समाप्नुयाद्विष्णुपदं महात्मा ॥
महोपनि० ।१५॥
पौरुषेणैव सूक्तेन ततो विष्णुं समर्चयेत् ।१६॥शाण्डिल्यस्मृ०
एषा वैष्णवी नाम संहितैतां प्रयुञ्जन् ।
विष्णुं प्रीणाति ॥१७। ब्राह्मण० ॥

॥ इति पुरुषसूक्तमहात्म्यम् ॥



। श्रीभाष्यकाराय नमः ।

# अथ पुरुषसूक्तोपोद्घातः ।

ऐ पुरुषपदपङ्कजपरागपूतप्रेमियों !

अकारणकरुणा वरुणालय अखिलब्रह्माण्डनायक श्रीकान्त परब्रह्म श्रीमन्नारायण भगवान् ने इस दुरन्त दुस्तर संसार में निमग्न तापत्रयाभितप्त सुर नर तिर्यक् स्थावरादि जन्तुओं के परमकल्याण के लिये परम व्योम में अगाध शब्दब्रह्मपयोनिधिको मथकर दधिसे घृत के समान सकल श्रुतिनिकरसारभूत "पुरुषसूक्त" का आविर्भाव किया है। इससे यह सूक्त साक्षात् भगवान् का ही है। "पुरुषसूक्त" की महिमा अपार है। उसका यथार्थ में वर्णन कोई नहीं कर सकता। शेष महेश दिनेश गणेश भी इसकी महिमा को पूरी तरह से नहीं कह सकते हैं।

यह प्रस्तुत "पुरुषसूक्त" 'ऋग्वेदसंहि० अष्टक० ८ मण्डल० १० अध्याय० ४ वर्ग० १७ अनुवाक० ७ में स्पष्ट लिखा है, "सामवेदसंहिता० पूर्वार्चिक० प्रपाठक० ६ अर्धप्रपाठक० ३ में भी है"। यह सूक्त "अथर्ववेदसंहि० काण्ड–१९ अनुवाक–१ सूक्त–६ में है और "शुक्लयजुर्वेदसंहि० अध्याय० ३१ में भी है। यह सूक्त "कृष्णयजुर्वेद की तैत्तिरीयशाखा में अठारह ऋचात्मक है। यह

इतना सुप्रसिद्ध तथा माननीय सूक्त है कि जिसका दक्षिण भारत से लेकर उत्तर भारत पर्यन्त लाखों वैदिक द्विजगण कण्ठाग्र करके प्रति दिन भगवान् की सन्निधि में पाठ करते हैं और इस सूक्त से अङ्गन्यास तथा भगवत् पूजन और पुत्रेष्टि प्रभृति भी वैदिक द्विजगण करते हैं, तथा इसके द्वारा धर्म अर्थ काम मोक्ष को भी प्राप्त करते हैं। इसकी सर्वोत्कृष्टउपादेयता पर मुग्ध होकर मारवाड़ के सज्जन वृन्द ने जिस समय मैंने "पुष्करराज" यात्रा की उस समय मुझसे निवेदन किया कि हिन्दी भाषा में "पुरुषसूक्त" की टीका हो जाती तो सर्वसाधारण संस्कृतानभिज्ञभगवद्भक्तजनों को बहुत ही लाभ होता। पुनः छपरा जिले के भगवद्भक्तों की प्रार्थना से विष्णुभक्त-गणदास यह अकिंचनजन "मर्मबोधिनी" भाषाटीका करने के लिये उद्यत है। परन्तु कुछलोग यह कहते हैं कि चारो वेदों में "पुरुष-सूक्त" है तो आप किसकी व्याख्या करने के लिये उद्यत हैं। इस विषय में मेरा यह कहना है कि—

**तस्य यजुरेव शिरः। ऋग्दक्षिणःपक्षः। सामोत्तरः पक्षः। आदेश आत्मा। अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा॥**

तैत्तिरीयोपनि० बल्ली० २ अनुवाक० ३॥

इस मनोमयकोश का यजुर्वेद ही शिर है। ऋग्वेद दक्षिण पक्ष है। सामवेद उत्तरपक्ष है। वेद का ब्राह्मण भाग मध्यभाग है। अथर्ववेद पुच्छरूप पृष्ठभाग आधार है॥३॥ इस तैत्तिरीयोपनिषद् के प्रमाण से शिरोभाग श्रेष्ठतम यजुर्वेदज्ञात होता है। अतः यजु-र्वेदोक्त "पुरुषसूक्त" की ही व्याख्या करने के लिये यह जन



उद्यत है। यद्यपि **"शतं च नव शाखासु यजुषामेव जन्मनाम्"** सीतोपनि०॥ इस सीतोपनिषद् के प्रमाणसे तथा॥ **नवाधिकशतंशाखा यजुषो मारुतात्मज॥** मुक्तिकोपनि० अध्याय० १ मं० १२॥ इस मुक्तिकोपनिषद् के प्रमाण से एक सौ नव शाखा यजुर्वेद की हैं। तौभी॥ **कलौमाध्यन्दिनी शाखा॥** इस आप्त वचन प्रमाण से माध्यन्दिनी शाखा में जो सोलह ऋचात्मक "पुरुषसूक्त" है उसकी भाषाटीका करने के लिये यह यति उद्यत है। शिष्टाग्रगणाग्रगण्य पराशर महर्षि ने "बृहत्पराशर-स्मृति" के दूसरे अध्याय में सोलह ऋचाओं से न्यासविधान किया है और परमसात्त्विकहारीतमहर्षिने "वृद्धहारीतस्मृति" के आठवें अध्याय में सोलह ऋचाओं से ही न्यासका विधान किया है। **"सनत्कुमारसंहिता"** में सन्तान यागकी विधि भी सोलह ऋचाओं से ही कही गयी है। इससे **॥ महाजनो येन गतः स पन्थाः॥** महाभारत०॥ इस वचनानुसार सोलह मंत्रात्मक "पुरुषसूक्त" की ही भाषा टीका यह अकिंचन करता है। "पुरुष-सूक्तम्" यह पद "पुरुष+सु+उक्तम्" इन तीनों से बना है। इनमें से **॥ वेदाहमेतं पुरुषम्॥** यजुर्वे० अध्या० ३१ मं० १८॥ मैं पर ब्रह्मनारायणपुरुष को जानता हूँ॥१८॥ **तमेव चाद्यं पुरुषं प्रपद्ये** ॥ भगवद्गी० अध्याय १५ श्लो० ४॥ उसी आदिपुरुष नारायण को मैं प्रपत्ति करता हूँ॥ ४॥ इन श्रुति स्मृति के प्रमाणों से परब्रह्म नारायण को "पुरुष" कहते हैं। "सु" का अर्थ है

सुन्दर अच्छा प्रकार से तथा "उत्तमम्" का अर्थ परिमाषण है। इस प्रकार के "पुरुषसूक्तम्" इस पद का संकलनार्थ यह होता है कि—"पूर्ण सच्चिदानन्द परब्रह्मनारायण के स्वरूप रूप गुण वैभव आदिक को सुन्दर "अच्छे प्रकार से प्रतिपादन करके वाला वेद-वचन" इस पूर्वोक्त सूक्त की "मर्म बोधिनी" टीका करके महात्माओं के सम्मुख उपस्थित किया है। इसे देखने से यह बात भलीभाँति विदित हो जायेगी कि वेदका वेदत्व क्या है, वेदों की नित्यता, वेदार्थका प्रयोजन नारायण का ध्यान समस्तब्रह्माण्ड की उत्पत्ति अध्यात्मयज्ञ ऋषि देवता मनुष्यादि के भेद और ब्राह्मणादिवर्णों की उत्पत्ति धर्मतत्त्व आदि अनेक गूढ़ विषय इस में निरूपित किये गये हैं। इस टीका में पहले अन्वयार्थ लिख कर इसके बाद विशेषार्थ और भावार्थ लिखे गये हैं।

( ) इस प्रकार के कोष्टक में मूलपद प्रश्नोपनिषद् के छठवें प्रश्न में सोलह कलाओं का पुरुष वर्णन किया गया है, जैसे

**स प्राणमसृजतप्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियम् ।**
**मनोऽन्नमन्नाद्वीर्यं तपो मंत्राः कर्म लोका लोकेषु च नामच ॥**

प्रश्नोपनि० प्रश्न० ६ मं० ४॥ प्राण १ श्रद्धा २ आकाश ३ वायु ४ तेज ५ बल ६ पृथ्वी ७ इन्द्रियसमूह ८ मन ९ अन्न १० वीर्य ११ तप १२ मंत्र १३ कर्म १४ लोक १५ नाम १६ ये सोलह कलाएँ पुरुष की हैं ।।४।। ठीक वैसे ही प्रस्तुत "पुरुषसूक्त"



भी सोलह ऋचात्मक है। इस सूक्त की पहली ऋचामें अनन्त शिर नेत्र चरण वाले साकार नारायण का सर्व देश में व्यापकत्व वर्णित किया गया है। दूसरी में सर्व काल में विष्णु की व्यापकता प्रतिपादन करते हुए मोक्ष का स्वामित्व प्रवचन किया गया है। तीसरी में श्रीहरि के वैभव तथा चतुर्व्यूह और अनिरुद्धका वैभव प्रतिपादित किया गया है। चौथी में अनिरुद्ध भगवान् के स्थावर जंगम रूप बहु भवन संकल्प का वर्णन है। पाँचवीं ऋचा में पादनारायण भगवान् से प्रकृति और चतुर्मुख पुरुष की उत्पत्ति का वर्णन किया गया है। छठवीं में ग्राम्य तथा आरण्यादिक संसार की सृष्टि का प्रतिपादन किया गया है। सातवीं में यज्ञ पुरुष से ऋग्वेद यजुर्वेद सामवेदादिक प्रकट होना वर्णन किया गया है। आठवीं में प्रजापति से अश्व वानर गौ बकरा भेंड़ की उत्पत्ति का वर्णन किया गया है। नवमी में मानसयज्ञ में पुरुष का प्रोक्षण संस्कार तथा देवता और साध्य तथा ऋषि का प्रतिपादन करते हुए मोक्ष का वर्णन किया गया है। दशमीं में चतुर्मुख ब्रह्मा के मुख भुजा जंघा पैर क्या हुए उस प्रश्न का प्रतिपादन किया गया है। ग्यारहवीं में प्रजापति के मुख से ब्राह्मण भुजा से क्षत्रिय जंघासे वैश्य पैर से शूद्र को उत्पत्ति का कथन किया गया है। बारहवीं में मन से चन्द्रमा, नेत्र से सूर्य, श्रोत्र से वायु, तथा प्राण और मुख से अग्नि के प्रादुर्भाव का वर्णन किया गया है। तेरहवीं में नाभि से अन्तरिक्षलोक शिर से स्वर्गलोक चरण से पृथ्वी कान से संपूर्ण दिशा आदिक की उत्पत्ति का प्रतिपादन किया गया है। चौदहवीं में आत्मसमर्पणरूप मानसयाग में वसन्तऋतु को घृत ग्रीष्मऋतु को समिधा शरद् ऋतु को हविष्य

प्रतिपादन करके सृष्टियज्ञ वर्णित किया गया है। पन्द्रहवीं में मानस यज्ञ की सात परिधियाँ तथा इक्कीस समिधाओं और पुरुष पशु का वर्णन किया गया है। सोलहवीं ऋचामें सृष्टि का उपसंहार तथा मोक्षका वर्णन किया गया है।

पूर्वोक्त सोलह ऋचात्मक सूक्त में संपूर्ण वेदों का सार संग्रह किया गया है। इसके मंत्र इतने सरल और सुन्दर हैं कि थोड़ा अभ्यास करने से भी मनुष्य इसको सहज ही समझ सकता है। परन्तु इसका आशय इतना गूढ़ तथा गंभीर है कि आजीवन निरन्तर अभ्यास करते रहने पर भी उसका अन्त नहीं आता। प्रतिदिन नये-नये भाव उत्पन्न होते ही रहते हैं इससे सदा यह सूक्त नवीन ही बना रहता है। जैसा इस सूक्त में कर्म, ज्ञान और उपासना का एक साथ वर्णन किया गया है वैसा अन्य सूक्तों में मिलना असंभव है। अतः अन्त में मेरी प्रार्थना है कि सज्जन जन इस टीका सहित पुरुषसूक्त का प्रचार कर के विश्व का कल्याण करें। शमिति।

॥ इति पुरुषसूक्तोपोद्घातः ॥

॥ ॐ श्रीधराय नमः ॥

॥ ॐ श्रीभाष्यकाराय नमः ॥

शुक्लयजुर्वेदोक्तं

# पुरुषसूक्तम्

## ॥ प्रथमा-ऋक् ॥

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमि ठँ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥१॥

## ॥ मङ्गलाचरणम् ॥

श्रीरङ्गेशो वृषाद्रीशो वरदो यदुशैलराट् ।
पोष्यः शिष्यो गुरुः पुत्रो यस्य तं गुरुमाश्रये ॥१॥

अन्वयार्थ—(सहस्रशीर्षा) अनन्त मस्तक वाला (सहस्राक्षः) अनन्त नेत्रसंपन्न (सहस्रपात्) अनन्त चरणयुक्त (पुरुषः) सर्वत्र परिपूर्ण सर्वव्यापक परब्रह्म नारायण है (सः) वह परब्रह्म नारायण (भूमिम्) ब्रह्माण्डगोलक रूप समस्त पृथिव्यादिक को (सर्वतः) तिर्यक् ऊर्ध्व नीचे भीतर बाहर सब ओर से (स्पृत्वा) व्याप्त हो के (दशाङ्गुलम्) अनन्तयोजन अथवा दश अंगुल परिमित देश को (अति) अतिक्रमण करके (अतिष्ठत्) स्थित होता है ॥१॥

विशेषार्थ—अनन्त मस्तक वाला। अब यहाँ पर यह शंका होती है कि "सहस्रशीर्षा" का अर्थ अनन्त मस्तक कैसे होता है? इसका उत्तर मुद्गलोपनिषद् में लिखा है कि—

**सहस्रशीर्षेत्यत्र स शब्दोऽनन्तवाचकः** मुद्गलोप-मं० १॥

सहस्रशीर्षा यहाँ पर सहस्र का अर्थ अनन्त है।।१।' और

**उत्तमाङ्गं शिरः शीर्षं मूर्द्धा नामस्तको ऽस्त्रियाम्** ॥

॥ अमरको० काण्ड—२ वर्ग—६ श्लो० ६५॥ उत्तमाङ्ग १ शिरस् २ शीर्ष ३ मूर्द्धन् ४ मस्तक ५ ये शिर के नाम हैं ॥६५॥ इस अमरकोष के प्रमाण से "शिरस्" का अर्थ मस्तक होता है "सहस्राणि शिरांसि यस्यासौ" इस विग्रह में ॥ अनेकमन्यपदार्थे ॥ व्या० अध्या० २ पाद—२ सूत्र—२४॥ इस सूत्र से बहुव्रीहि समास होने पर॥ शीर्षंश्छन्दसि ॥६।१।६०॥ इस सूत्र से शीर्षन् हुआ है। सहस्रशीर्षा' यहाँ पर ॥ सर्वनामस्थाने चासंबुद्धौ ॥६।४।८॥ इस सूत्र से दीर्घ होता है। अनन्त नेत्रवाला। यहाँ पर यह प्रश्न होता है कि—"सहस्राक्षः" शब्द का पूर्वोक्त अर्थ कैसे होता है? इसका उत्तर यह लिखा है कि—

**॥ शतं सहस्रमयुतं सर्वमानन्त्यवाचकम् ॥**

इस आप्तवचन के प्रमाण से शत सहस्र अयुत का अनन्त अर्थ होता है। और "अक्ष" का अर्थ—

**अथाक्षमिन्द्रिये** अमरको० कां० ३ वर्ग० ३ श्लो० २२१॥ अक्ष इन्द्रिय का नाम है ॥२२१॥



इस अमरकोश के प्रमाण से नेत्रेन्द्रिय यहाँ पर होता है। अथवा "सहस्राणि अक्षीणि यस्यासौ" इस विग्रह में बहुव्रीहि समास होने पर॥ सुपो धातुप्रातिपदिकयोः ॥२।४।७१॥ इस सूत्र से सुप् का लुक् होकर "सहस्राक्षः" पद होता है ॥

**लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी। दृग्दृष्टी च ॥**

अमरको० कां०२ वर्ग६ श्लो० ९३॥

लोचन१ नयन२ नेत्र३ ईक्षण ४ चक्षुस् ५ अक्षि ६ दृक् ७ दृष्टि ८ ये आँख के नाम हैं॥ ९३॥ इन प्रमाणों से अनन्त नेत्रवाला अर्थ होता है। अनन्त चरणवाला। यहाँ पर यह संदेह होता है कि पाद का अर्थ चरण कैसे होता है? इसका उत्तर अमरकोष में लिखा है कि—

**॥पादः पदङ्घ्रिश्चरणोऽस्त्रियाम् ॥**

अमरको० कां०२ व०६ श्लो० ७१॥

पाद १ पद् २ अंघ्रि ३ चरण ४ ये पाँव के नाम हैं॥ ७१॥ इस प्रमाण से पाद का अर्थ चरण होता है। "सहस्रपात्" यह पद॥ संख्यासुपूर्वस्य ॥ ५।४।१४०॥ इस सूत्र से निष्पन्न होता है। सर्वत्र परिपूर्ण सर्वव्यापक परब्रह्म नारायण। अब यहाँ पर यह शंका होती है कि "पुरुष" शब्द का अर्थ परब्रह्म नारायण है इसमें क्या प्रमाण है? इसका उत्तर यह लिखा है कि—

**सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।**

**स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥**

ऋग्वे० अष्टक० ८ मण्डल १० अध्याय ४ अनुवाक् ७

सूक्त ९० मं० १ ॥

अनन्तशिरों से युक्त अनन्त नेत्रादिकज्ञानेन्द्रियों से सम्पन्न अनन्त चरणादिक कर्मेन्द्रियों से संयुक्त वह परब्रह्मनारायण ब्रह्माण्ड गोलक रूप भूमि को सब ओर से व्याप्त करके अनन्तयोजन परिमित देश को उल्लंघन कर स्थित होता है ॥१॥

**सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् ।**
**स भूमिं सर्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥**

सामवे० पूर्वार्चिक० प्रपाठक० ६ अर्धप्रपाठ० ३ सूक्त १३ मं० ३ ॥

अनन्तमस्तक वाला अनन्त नेत्र वाला अनन्त चरण वाला वह परब्रह्म परमेश्वर नारायण भूमि को सब ओर से व्याप्त करके दश अगुल परिमित देश को अतिक्रमण करके स्थित हुआ है ॥३॥

**सहस्रबाहुः पुरुषः सहस्राक्षः सहस्रपात् ।**
**स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥**

अथर्ववे० काण्ड १९ अनुवाक०१ सूक्त ६ मं० १ ॥

अनन्त भुजाओं से युक्त अनन्त नेत्रों से संपन्न अनन्त पैरों से युक्त वह सर्वव्यापक परब्रह्म नारायण पृथ्व्यादि देश को सब ओर से व्याप्त कर के अनन्त योजन परिमित देश को उल्लंघन करके स्थित होता है ॥१॥



**योसावसौ पुरुषः** ॥ ईशोपनि० मंत्र० १६ ॥

सूर्यमण्डल में जो यह परब्रह्म नारायण है ॥१६॥

**पुरुषान्न परं किञ्चित्** ॥ कठोपनि० अ० १ व० ३ मं० ११

परब्रह्म नारायण से श्रेष्ठ कोई वस्तु नहीं है ॥११॥

**अंगुष्ठमात्रपुरुषो मध्य आत्मनि तिष्ठति ॥**

कठोपनि० ॥ अध्याय २ वल्ली० १ मं० १२ ॥

अंगुष्ठ परिमाण अन्तर्यामी परब्रह्म नारायण आत्मा के मध्य में स्थित है ॥१२॥

**अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ॥१३॥**

अगुष्ठ परिमाण अन्तर्यामी परब्रह्म नारायण धुएँ से रहित प्रकाश के समान देह में है ॥१३॥

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः** ॥ कठोपनि० अध्या० २ वल्ली० ६ मं० १७ ॥

अंगुष्ठ परिमाण अन्तर्यामी परब्रह्म नारायण सबके हृदय में सर्वदा प्रतिष्ठ है ॥१७॥

**इमाःषोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरुपे** ॥ प्रश्नोपनि० प्रश्न० ६ मं० ५॥

परब्रह्म नारायण की ओर जाने वाली यह सोलह कला नारायण को प्राप्त होकर विलीन हो जाती है। उनके नाम और रूप नष्ट हो जाते हैं ॥५॥

**तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथाः ।।६।।**

उस जानने योग्य परब्रह्म नारायण को जानो जिससे तुमको मृत्यु पीड़ा न दे ।।६।।

**येनाक्षरं पुरुषं वेद ।।** मुण्डकोपनि० मुण्डक० १ खण्ड-२ मं०।।१३।।

जिससे अविनाशी परब्रह्म नारायण को जानता है ।।१३।।

**उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः ।।**

।। मुण्डकोप० मुण्डक० ३ खं० २ मं० १।।

जो निष्काम बुद्धिमान् परब्रह्म नारायण की उपासना करते हैं वे निश्चय जन्म को लांघ जाते हैं ।।१।।

**यदापश्यःपश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।।**

।। मुण्डको० मु० ३ खं० १ मं० ३।।

जब साधकजन ज्योतिर्मय कर्ता ब्रह्मयोनि परमेश्वर नारायण को देखता है ।।३।।

**परात्परं पुरुषमुपैति दिव्यम् ।।** मुण्डको० मु०३खं०२मं०८।।

पर से पर दिव्य परब्रह्म नारायण को प्राप्त करता है ।।८।।

**य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते ।।**

छान्दोग्योप० अध्या० १ प्रपाठक० १ खं० ६ मं० ६।।

जो यह सूर्यमण्डल में हिरण्मय परब्रह्म नारायण देखा जाता है ।।६।।



**अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते ।।**

छान्दोग्योप० अ० १ प्रपा० १ खं० ७ मं० ५।।

जो यह नेत्र के भीतर परब्रह्म नारायण देखा जाता है ।।५।।

**य एष चन्द्रमसि पुरुषो दृश्यते ।।**

छान्दो० अ० ४ प्रपा० ४ खं० १२ मं० १।।

जो यह चन्द्रमा में परब्रह्म नारायण देखा जाता है ।।१।।

**तस्य हैतस्य पुरुषस्य रूपं यथा महारजनं वासः ।।**

बृहदरण्यको० अध्याय २ ब्राह्मण० ३ मं० ६।।

निश्चय कर के जैसा महारजन वस्त्र होता है वैसा ही तेजोमय परब्रह्म नारायण का रूप है ।।६।।

**योसावसौ पुरुषः ।।** बृहदा० अध्या० ५ ब्राह्म० १५ मं० १।।

जो सूर्य - मण्डल में वह परब्रह्म नारायण है ।।१।।

**वेदाहमेतं पुरुषम् ।।** श्वेताश्वतरो० अध्याय ३ मं० ८।।

**अङ्गुष्ठमात्रःपुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः।**

श्वे० अ० ३ मं० १३।।

**सहस्रशीर्षा पुरुषः ।।१४।।**

**पुरुषो ह वै नारायणोऽकामयत ।।** नारायणोप० मं० १।।

निश्चय कर के परब्रह्म नारायण इच्छा किये ।।१।।

**ऋतंसत्यंपरं ब्रह्म पुरुषम् ॥** तैत्तिरीयारण्यक० अनुवाक०१२॥

ऋत सत्य परब्रह्म नारायण को ॥१२॥

**इमे वै लोकाःपूरयमेव पुरुषो योऽयंपवते सोऽस्यां-पुरि शेते तस्मात्पुरुषः॥** शतपथ १३।६।२।१॥

इन लोकों में पूर्ण होने से और शयन करने से वह नारायण पुरुष है ॥१॥

**पुरुषं ह नारायणं प्रजापतिरुवाच ॥** शतपथ ब्राह्म० ॥

ब्रह्मा ने परब्रह्म नारायण भगवान् से कहा ॥

**अनेन विधिना कृत्वा स्नपनं पुरुषस्य तु ।**
**दत्वा पायसमन्नं च शेषं परिसमापयेत् ॥**

बोधायनसूत्र० विष्ण्वाराधनप्रकरण० ॥

इस विधि से परब्रह्म नारायण का स्नपन करके और पायसान्न को निवेदन करके शेष क्रिया को समाप्त करे ॥

**स्वहृदयपद्मस्यावाङ्मुखस्य मध्ये दीपवत्पुरुषं ध्यायेत् ॥**

विष्णु स्मृ० अध्याय० ९८।

अवाङ्मुख अपने हृदय कमल के मध्य में दीप के समान परब्रह्म नारायण को ध्यान करे ॥९८॥

**एष वै पुरुषो विष्णुर्व्यक्तयाव्यक्तः सनातनः ॥**

॥ शंखस्मृ० अध्या० ७॥



वह परब्रह्म नारायण भगवान् निश्चय करके व्यक्ति से अव्यक्त सनातन है ॥ ७ ॥

**पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥**

॥ भगवद्गीता० अध्या० १० श्लोक० १२ ॥

सब ऋषिगण आपको—सनातन दिव्य सब देवों का आदि देव अजन्मा सर्वव्यापी परब्रह्म नारायण कहते हैं ॥ १२ ॥

**॥ सनातनस्त्वं पुरुषो मतो मे ॥** भ०गी० अ० ११ श्लो०१८

आप सनातन परब्रह्म नारायण हैं, ऐसा मेरा मत है ॥१८॥

**त्वमादिदेवः पुरुषः पुराणः ॥ ३८ ॥**

आप आदिदेव सनातन परब्रह्म नारायण हैं ॥ ३८ ॥

**अव्ययः पुरुषः साक्षी ।** म० भा० अनु० वि० सह० श्लो०२॥

अव्यय १ पुरुष २ साक्षी ३ ये परब्रह्म नारायण के नाम हैं ॥२॥

**महतस्तमसः पारे पुरुषं ह्यतितेजसम् ॥**

॥ महाभा० शान्तिप०भीष्मस्तवरा० श्लोक ॥४३॥

बड़े अन्धकार से परे अति तेजस्वी परब्रह्म नारायण हैं ॥४३॥

**युगान्तशेषं पुरुषं पुराणं तं वासुदेवं शरणं प्रपद्ये ॥**

महाभारत शान्ति० गजेन्द्रमोक्ष० श्लोक ७५ ॥

युगान्त में रहने वाले सनातन सर्वव्यापी उस वासुदेव परब्रह्म नारायण की शरण में प्राप्त करता हूँ ॥ ७५ ॥

पुरुष स विभुः कर्ता सर्वलोकपितामहः ॥
धर्मसंस्थापनार्थाय प्रजज्ञेऽन्धकवृष्णिषु ॥ महाभारत ॥
पुरुषं विश्वकर्माणंहंसं नारायणं विभुम् ॥
नारायणस्तु पुरुषो विश्वरूपो महाद्युतिः ॥
चतुर्विभक्तः पुरुषः स क्रीडति यथेच्छति ।

सबलोक के पितामह सबका कर्ता सर्वव्यापक वे परब्रह्म नारायण धर्म संस्थापन करने के लिये अन्धक वृष्णि कुल में प्रगट हुए। विश्वकर्ता सर्वत्रपूर्ण सर्वव्यापक हंस परब्रह्म नारायण भगवान को। विश्वरूप बड़ा प्रकाश वाला सर्वपूर्ण परब्रह्म नारायण हैं। चार विभाग से विभक्त वह परब्रह्म नारायण जैसी इच्छा करता है वैसी ही क्रीड़ा करता है।

प्राणायामेन पुरुषं ध्यायमाना जनार्दनम् ।
॥ बाल्मीकि रा० ॥

अमोघं व्रत मे क्षान्तं पुरुषे पुष्करेक्षणे ॥
असौ रामो महाबाहुरतिमानुषचेष्टया ।
तेजो महत्तया चापि संस्मारयति पूरुषम् ॥

प्राणायाम से जनार्दन परब्रह्म नारायण को चिन्तवन करती हुई। कमल नयन पुरुष में मेरी क्षमा अमोघ है। अति मानुष



की चेष्टा से आजानु महाबाहु यह श्री रामचन्द्र हैं। अपने महान् तेज से परब्रह्म नारायण को अच्छी प्रकार स्मरण कराते हैं।

पुरुषस्यांशसंभूतं त्वां वयं निरणैष्महि । हरिवंश०॥

हम परब्रह्म नारायण के अंश से उत्पन्न आपको निर्णय करते हैं।

तत्र गत्वा जगन्नाथं वासुदेवं वृषाकपिम् ।
पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः ॥श्रीमद्भागव०॥

वहाँ पर जाकर वृषाकपि अखिल ब्रह्माण्डनायक सर्वव्यापक वासुदेव परब्रह्म नारायण को समाहित होकर पुरुषसूक्त से उपस्थान किये।

अथवा पुरुषसूक्तेन पुरुषं नित्यमर्चयेत् ॥अग्निपुरा०॥

अथवा पुरुषसूक्त से नित्यप्रति परब्रह्म नारायण की पूजा करे।

स एव वासुदेवोऽयं साक्षात्पुरुष उच्यते ॥नरसिंहपु०॥
सर्वलोकपतिः साक्षात्पुरुषः प्रोच्यते हरिः ।
तं विना पुण्डरीकाक्षं कोऽन्यः पुरुषशब्दभाक् ॥

वह वासुदेव निश्चय करके साक्षात्परब्रह्म नारायण कहे जाते हैं। अखिल ब्रह्माण्डनायक साक्षात् परब्रह्म नारायण पुरुष शब्द से कहे जाते हैं। उस कमलनयन परब्रह्म नारायण के बिना दूसरा कौन पुरुष शब्द से कहा जा सकता है।

**पुं संज्ञे तु शरीरेऽस्मिन् शयनात्पुरुषो हरिः ।**
**शकारस्य षकारोयं व्यत्ययेन प्रयुज्यते ॥पद्मपुरा०॥**
**यद्वा पुरे शरीरेऽस्मिन्नास्ते स पुरुषो हरिः ।**
**यदि वा पुरुवासीति पुरुषः प्रोच्यते हरिः ॥**
**यदि वा पूर्वमेवासमिहेति पुरुषं विदुः ।**
**यदि वा बहुदानाद्वैविष्णुः पुरुष उच्यते ॥**
**पूर्णत्वात्पुरुषो विष्णुः पुराणत्वाच्च शार्ङ्गिणः ।**
**पुराणभजनाच्चापि विष्णुः पुरुष ईर्यते ॥**
**यद्वा पुरुशब्दोयं रूढ्या वक्ति जनार्दनम् ॥**

पुंनाम इस शरीर में सोने से नारायण भगवान् पुरुष हैं। शकार का यह पुरुष शब्द में षकार व्यत्यय से प्रयोग किया जाता है। अथवा इस शरीर में नारायण भगवान् रहते हैं। इससे पुरुष कहे जाते हैं या शरीर में वास करते हैं इससे परब्रह्म नारायण पुरुष कहे जाते हैं। अथवा इस संसार में पहले से नारायण भगवान् थे इससे महर्षि लोग उनको पुरुष जानते हैं। या बहुत दान देने से ही विष्णु भगवान् पुरुष शब्द से कहे जाते हैं। नारायण भगवान् के पूर्ण होने से विष्णु पुरुष कहे जाते हैं अथवा सबसे पुराना होने से परब्रह्म नारायण पुरुष कहे जाते हैं। या पुराण के सेवन करने से परब्रह्म नारायण पुरूष कहे जाते हैं। अथवा यह पुरुष शब्द रूढ़ी से ही परब्रह्म नारायण को कहता है।



**॥ पुरुषो धातृपुन्नाम नरात्मपरमात्मसु ॥** अभिधान-को०॥ धाता में १ पुन्नाम में २ नर में ३ जीवात्मा में ४ परमात्मा में ५ पुरुष शब्द का प्रयोग होता है।

**पुराण पुरुषो यज्ञः पुरुषः पुरुषोत्तमः ॥** अभिधान-को०:॥ पुराणपुरुष १ यज्ञ २ पुरुष ३ पुरुषोत्तम ४ ये परमात्मा नारायण के नाम हैं। श्रुति स्मृति इतिहास पुराण कोश प्रमाण हैं कि "पुरुष" शब्द का अर्थ परब्रह्म नारायण है। "पुरुषः" यहाँ पर तुदादि पठित "पुरुअग्रगमने" धातु से ॥पुरः कुषन् ॥ उणादि० पाद० ४॥ इस उणादि सूत्र से कुषन् प्रत्यय और ॥ ञ्नित्यादि नित्यम् ॥६।१।१९७॥ इस सूत्र से आदि उदात्तस्वर होता है। ज्ञान शक्ति आदिक से परिपूर्ण वह परब्रह्म नारायण। "सः" यहाँ पर ॥ त्यदादीनामः॥ ७।२।१०२॥ इस सूत्र से अकार और ॥ तदोः सः सावनन्त्ययोः॥ ७।२।१०६॥ इस सूत्र से सकार होता है। ब्रह्माण्ड गोलकरूप समस्त संसारको। अब यहाँ पर यह प्रश्न होता है कि "भूमि" शब्द का पूर्वोक्त अर्थ कैसे होता है। इसका उत्तर यह है कि—भ्वादिपठित "भू सत्तायाम्॥ धातु से "भवति" इस विग्रहमें ॥ ॥ भुवः कित् ॥ उणादि० पा० ४॥ इस उणादि सूत्र से मि प्रत्यय होकर "भूमि" शब्द निष्पन्न होता है। जिसका अर्थ मेदिनीकोश में लिखा है कि—

**॥ भूमिर्वसुन्धरायांस्यात् स्थानमात्रेपि च स्त्रियाम्**

॥ मेदिनी को० ॥ पृथ्वी में और सवस्थानमात्र में भूमि शब्द का प्रयोग होता है। इस व्याकरण और कोश के प्रमाण से "भूमि" शब्द का अर्थ ब्रह्माण्डगोलकरूप समस्त संसार होता है। "भूमिम्" यहां पर ॥ अमि पूर्वः ॥ ६।१।१०७॥ इस सूत्र से पूर्वरूप होता है। तिर्यक् उर्ध्व नीचे भीतर बाहर सब ओर से। "सर्वतः", यहाँ पर ॥ पञ्चम्यास्तसिल् ॥५।३।७॥ इस सूत्र से तसिल् प्रत्यय होता है। व्याप्त करके। "स्पृत्वा" यहाँ पर स्वादि पठित "स्पृ प्रीतिपालनयोः। प्रीति चलनयोरित्यन्ये" इसधातुसे ॥ समानकर्तृकयोः पूर्वकाले ॥ ३।४।२१॥ इस सूत्र से क्त्वा प्रत्यय और ॥ क्त्वातोसुन्कसुनः ॥१।१।४०॥ इस सूत्र से अव्यय संज्ञा तथा ॥ अव्ययादाप्सुपः ॥२।४।८२॥ इस सूत्र से लुक् होता है। अनन्तयोजन। अब यहाँ पर यह शंका होती है कि "दशाङ्गु-लम्" पद का अर्थ अनन्त योजन कैसे होता है? इसका समाधान यह है कि—

**अनन्तयोजनं प्राह दशाङ्गुलवचस्तथा ॥** मुद्गलोप० मं०१

दशाङ्गुलवचन अनन्त योजन को कहता है ॥१॥ इस प्रमाण से अनन्तयोजन अर्थ होता है। "दशाङ्गुलम्" यहाँ पर ॥ तत्पुरुष-स्याङ्गुलेः संख्याऽव्ययादेः ॥५-४-८६॥ इस सूत्र से अच् होता है। उल्लंघनकरके। अब यहाँ पर यह प्रश्न होता है कि "अति" का अर्थ लंघन कैसे होता है। इसका उत्तर यह लिखा है कि—

**॥ प्रकर्षे लङ्घनेप्यति ॥ अमरको॰** कां०३व०३श्लो०–२४१॥

प्रकर्ष और लंघन अर्थ में अति का प्रयोग होता है ॥२४१॥ इस अमरकोशके प्रमाणसे अति का अर्थ लंघन कर के होता है। स्थित होता है। "अतिष्ठत्" यहाँ पर ॥ पा घ्राध्मास्थाम्ना दाण् दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमन यच्छ पश्यर्च्छधौ शीयसीदाः ॥७।३।७८॥ इस सूत्रसे तिष्ठ होता है। नारायणोपनिषद् में लिखा है कि –



**यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपिवा।**
**अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥**

नारायणो मं० ॥१३॥ जो कुछ जड़ चेतन संसार देखा जाता या सुना जाता है उसके भीतर और बाहर व्यापक होकर नारायण स्थित हैं ॥१३॥ सूक्त के पहले मंत्र से साकार नारायण का प्रतिपादन किया गया है और सर्वदेश में विष्णु की व्यापकता कही गयी है। इस विषय में ये अधोलिखित प्रमाण हैं :—

**सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्।**
**सर्वतः श्रुतिमल्लोके सर्वमावृत्यतिष्ठति ॥**

॥ श्वेताश्वतरो॰ अध्या॰ ३ मं॰ १६॥ भगवद्गी॰ अध्या॰ १३ श्लो॰ १३॥ वह नारायण सब ओर हाथ पैरवाला सब ओर नेत्र सिर और मुख वाला तथा सब ओर कान वाला है, वही संसार में सबको व्याप्त कर के स्थित है ॥१३॥

**तस्य प्रथमया विष्णो र्देशतो व्याप्तिरीरिता।**

मुद्गलोप मं॰ २॥ पुरुषसूक्त की पहली ऋचासे सब देश में विष्णु भगवान् की व्यापकता कही गयी है ॥२॥ स्पष्ट इस मंत्र में साकार

ब्रह्म का वर्णन है तोभी कई सज्जनों का कहना है कि साकार व्यापक नहीं होता है। इस विषय में मेरा यह कहना है कि जैसे तिल में साकार तेल व्यापक है और दधि में घृत साकार व्यापक है तथा काष्ठ में साकार अग्नि व्यापक है। वैसे ही साकार ब्रह्म व्यापक है। ब्रह्म साकार यदि न हो तो आकाश के सामान जड़ हो जायगा। अथवा बन्ध्यापुत्र या कूर्म के दूध के समान हो जायगा। इससे साकार ही व्यापक सिद्ध होता है। इस पहली ऋचा का भाव हुआ कि—

अनन्त शिरों से युक्त अनन्त नेत्रादिक ज्ञानेन्द्रियसंपन्न अनन्त चरणादिक कर्मेन्द्रियों से युक्त ज्ञान शक्ति आदिक से परिपूर्ण वह परब्रह्म नारायण भगवान् समस्त चेतनाचेतन रूप ब्रह्माण्ड गोलक को तिर्यक् ऊर्ध्व नीचे भीतर बाहर सब ओर से व्याप्त करके अनन्तयोजन परिमित देश को अतिक्रमण करके स्थित है। अथवा नाभि के स्थान से दश अंगुल उल्लंघन करके स्थित रहता है ।१॥

## ॥ द्वितीया—ऋक् ॥

**पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्।**
**उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥२॥**

अन्वयार्थ—( इदम् ) यह वर्तमान चेतनाचेतनात्मक संसार तथा ( यत् ) जो (भूतम् ) बीता हुआ अतीत संसार ( च ) और



( यत् ) जो ( भाव्यम् ) आनेवाला भविष्य संसार है ( सर्वम् ) वह जड़ चेतन संसार ( एव ) निश्चयकरके ( पुरुषः ) पुरुषात्मक है। अर्थात् परब्रह्म नारायण का शरीर है। ( उत ) और ( अमृतत्वस्य ) मोक्षके ( ईशानः ) अधिपति स्वामी है ( यत् ) जो संसार मंडल ( अन्नेन ) अन्न, खाद्यपदार्थ करके ( अतिरोहति ) अत्यन्त उत्पन्न होता है ।।२॥

अथवा ( यत् ) जो ( भूतम् ) उत्पन्न हुआ ( च ) और ( यत् ) जो ( भाव्यम् ) उत्पन्न होनेवाला ( उत ) और ( यत् ) जो ( अन्नेन ) अन्नादिकों से ( अतिरोहति ) अत्यन्त बढ़ता है उस ( इदम् ) इस ( सर्वम् ) समस्त संसारको ( अमृतत्वस्य ) मोक्षका ( ईशानः ) अधिपति ( पुरुषः ) परब्रह्म नारायण ( एव ) ही हैं ।।२॥

विशेषार्थ—यह जो वर्तमान जड़चेतनात्मक जगत् है। "इदम्" यहाँ पर ।। स्वमोर्नपुंसकात् ॥७।१।२३॥ इस सूत्र से सु का लुक् होता है। और जो बीता हुआ चेतनाचेतनात्मक संसार है। "भूतम्" यह पद 'भ्वादि' पठित "भूसत्तायाम्" इस धातुसे ॥भूते ॥३।२।८४॥ इस सूत्र के अधिकार में ॥ क्तक्तवतू निष्ठा ।।१।१।२६।। निष्ठा ।।३।२।१०२।। इन सूत्रों से निष्ठा संज्ञा तथा क्त प्रत्यय होकर निष्पन्न होता है। और जो होनेवाला अवश्य भविष्य चेतनाचेतनात्मक जगत् है। भ्वादिपठित "भूसत्तायाम्" धातुसे ॥ ओरावश्यके ।।३।१।१२५।। इस सूत्रसे ण्यत् प्रत्यय और ॥ अचो ञ्णिति ।।७।२।११५।। इससे वृद्धि और ।।एचोऽयवायावः ।।६।१।७८।।

इस सूत्र से आच् तथा ॥ तित्स्वरितम् ॥६।१।१८५॥ इस सूत्र में स्वरित होकर "भाष्यम्" पद निष्पन्न होता है। वह सब संसार पुरुषात्मक अर्थात् परब्रह्म नारायण पुरुष के शरीर होने से ही पुरुष है। अब यहाँ पर यह प्रश्न होता है कि परब्रह्म नारायण के सब जड़ चेतन संसार शरीर है इसमें क्या प्रमाण है। इसका समाधान यह लिखा है कि —

**यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥३॥ यस्यापः शरीरं योऽप्सोन्तरो यमयति ॥४॥ यस्याग्निःशरीरम् ॥५॥ यस्यान्तरिक्ष शरीरम् ॥६। यस्य वायुः शरीरम् ॥७॥ यस्य द्यौःशरीरम् ।८॥ यस्यादित्यः शरीरम् । ९॥ यस्य दिशः शरीरम् ॥१०॥ यस्य चन्द्रतारकं शरीरम् ॥११॥ यस्याकाशः शरीरम् । १२ । यस्य तमः शरीरम् । १३। यस्य तेजसि तिष्ठं स्तेजसोऽन्तरः यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१४॥**

॥ वृहदा० अध्यायः ३ ब्राह्मण० ८ मं० ३॥—॥१४॥

जो परब्रह्म नारायण पृथ्वी में रहता है और पृथ्वी के भीतर रहता हुआ भी जिस नारायण को पृथ्वी नहीं जानती है जिसके पृथ्वी शरीर है जो पृथ्वी के भीतर नियमन करता है वही यह



अमृत परब्रह्म नारायण तेरा अन्तर्यामी है ॥३॥ जिसका जल शरीर है और जल के भीतर नियमन करता है ॥४॥ जिसका अग्नि शरीर है जिसका अन्तरिक्षलोक शरीर है ॥६॥ जिसका वायु शरीर है ॥७॥ जिसका दिव लोक शरीर है ॥८॥ जिसका आदित्य शरीर है ॥९॥ जिसका दिशा शरीर है ॥१०॥ जिसका चन्द्रमा और तारा शरीर हैं ॥११॥ जिसका आकाश शरीर है ॥१२॥ जिसका तम शरीर है ॥१३॥ जो तेज में रहता है और तेज के भीतर रहता हुआ भी जिस नारायण को तेज नहीं जानता है जिसका तेज शरीर है जो तेज के भीतर नियमन करता है वही यह अमृत परब्रह्म नारायण तेरा अन्तर्यामी है ॥१४॥

**यस्य सर्वाणि भूतानि शरीरम् ॥१५॥ यस्य प्राणः शरीरम् ॥१६॥ यस्य वाक् शरीरम् ॥१७॥ यस्य चक्षुः शरीरम् । १८। यस्य श्रोत्रं शरीरम् ॥१९॥ यस्य मनः शरीरम् ॥२०॥ यस्य त्वक् शरीरम् ॥२१॥ यस्य विज्ञानं शरीरम् ॥२२॥ यो रेतसि तिष्ठन् रेतसोऽन्तरो यं रेतो न वेद यस्यरेतः शरीरं योरेतोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । २३।**

जिसका सब भूत शरीर हैं ॥१५॥ जिसका प्राण शरीर है ॥१६॥ जिसका वाक् शरीर है ॥१७॥ जिसका नेत्र शरीर है ॥१८॥

जिसका कान शरीर है ॥१९॥ जिसका मन शरीर है ॥२०॥ चर्म जिसका शरीर है ॥२१॥ जिसका विज्ञान आत्मा शरीर है ॥२२॥ जो वीर्य में रहता है और वीर्य के भीतर रहता हुआ भी जिस परब्रह्म नारायण को वीर्य नहीं जानता है जिसका वीर्य शरीर है। जो वीर्य के भीतर नियमन करता है वही यह अमृत परब्रह्म नारायण तेरा अन्तर्यामी है ॥३॥

अन्तः शरीरे निहितो गुहायामज एकोनित्यो यस्य पृथिवी शरीरं यः पृथिवीमन्तरे संचरन् यं पृथिवी न वेद। यस्यापः शरीरं योऽपोन्तरे संचरन्यमापो न विदुः। यस्य तेजः शरीरं यस्तेजोन्तरे संचरन्यं तेजो न वेद। यस्य वायुः शरीरं योवायुमन्तरे संचरन् यं वायु र्न वेद। यस्याकाशः शरीरं यआकाशमन्तरे संचरन् यमाकाशो न वेद। यस्य मनः शरीरं यो मनोन्तरे संचरन्यं मनो न वेद। यस्य बुद्धिः शरीरं यो बुद्धिमन्तरे संचरन् यं बुद्धि र्न वेद। यस्याहंकारः शरीरं योहंकारमन्तरे संचरन् यमहंकारो न वेद। यस्य चित्तं शरीरं यश्चित्त मन्तरे संचरन् यं चित्तंन वेद। यस्याव्यक्तं शरीरं योऽव्यक्तमन्तरे संचरन् यमव्यक्तं न वेद। यस्याक्षरं शरीरं



योऽक्षरमन्तरे संचरन् यमक्षरं न वेद। यस्य मृत्युः शरीरं योमृत्युमन्तरे संचरन् यं मृत्यु र्न वेद। स एष सर्वभूतान्तरात्मापहतपाप्मा दिव्योदेव एको नारायणः

॥ सुबालो० ॥ खण्ड ७ ॥

शरीर के भीतर हृदय रूपी गुहा में एक नित्य अजन्मा परब्रह्म नारायण स्थित है। जिसका पृथ्वी शरीर है, जो पृथ्वी के भीतर रहता है जिसको पृथ्वी नहीं जानती है। जिसका जल शरीर है, जो जल के भीतर रहता है, जिसको जल नहीं जानता है। जिसका तेज शरीर है, जो तेज के भीतर रहता है, जिसको तेज नहीं जानता है। जिसका वायु शरीर है, जो वायु के भीतर रहता है, जिसको वायु नहीं जानती है। जिसका आकाश शरीर है, जो आकाश के भीतर रहता है, जिसको आकाश नहीं जानता है। जिसका मन शरीर है, जो मन के भीतर रहता है, जिसको मन नहीं जानता है। जिसका बुद्धि शरीर है, जो बुद्धि के भीतर रहता है जिसको बुद्धि नहीं जानती है। जिसका अहंकार शरीर है, जो अहंकार के भीतर रहता है, जिसको अहंकार नहीं जानता है। जिसका चित्त शरीर है, जो चित्त के भीतर रहता है, जिसको चित्त नहीं जानता है। जिसका अव्यक्त शरीर है, जो अव्यक्त के भीतर रहता है, जिसको अव्यक्त नहीं जानता है। जिसका जीवात्मा शरीर है, जो जीवात्मा के भीतर रहता है, जिसको जीव नहीं जानता है। जिसका मृत्यु शरीर है, जो मृत्यु के भीतर रहता है, जिसको मृत्यु नहीं

जानती है। वह यह सब जीवों की अन्तरात्मा पाप रहित दिव्य देव एक नारायण है ॥७॥

जगत्सर्वं शरीरं ते ॥ वाल्मीकि रामा० युद्ध कां सर्ग० ११२१॥

समस्त संसार आपका शरीर है।

यदम्बु वैष्णवः कायस्ततो विप्र वसुन्धरा।

पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता। विष्णुपुरा०।

हे विप्र जो जल विष्णु भगवान् का शरीर है उससे पर्वत समुद्र आदिक से संयुक्त पद्माकार पृथ्वी उत्पन्न हुई।

ब्रह्माद्याः सकला देवा यक्षतुम्बुरुनारदाः।

ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति। पद्मपु०॥

ब्रह्मा आदिक सब देवता यक्ष तथा तुम्बरु और नारदादिक ये सब पुरुष के अंश होने से पुरुष कहे जाते हैं। इन प्रमाणों से सिद्ध होता है कि सब चेतनाचेतन संसार परब्रह्म नारायण का शरीर है। इससे सर्व पद वाच्य नारायण है। यह श्रीमद्भगवद्गीता में लिखा है—

नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व।

अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः॥ श्रीमद्भ० अध्या० ११ श्लो० ४० ।



हे अनन्त सामर्थ्य वाले! आपके लिये आगेसे और पीछे से भी नमस्कार है। हे सर्व! आपके लिए सब ओर से ही नमस्कार हो; क्योंकि अनन्त पराक्रमशाली आप सब संसार को व्याप्त किये हुए हैं, इससे आप सर्व हैं ॥४०॥ इस श्लोक में स्पष्ट सर्व पद वाच्य भगवान् को कहा गया है। और ॥ सर्वः शर्वः शिवः स्थाणुः विष्णुसहस्रना० श्लो०४॥ सर्व १ शर्व २ शिव ३ स्थाणु ४ ये नारायण के नाम हैं ॥४॥ इसी बात को छान्दोग्य की श्रुति कहती है ॥ ऐतदात्म्यमिदं सर्वम् ॥ छान्दो० प्रपा० ६ अध्या० ६ खं० १४श्रु० ३॥ यह जितना प्रपञ्च है सब ब्रह्मात्मक है, यानी सब चर अचर नारायण के शरीर हैं और सब की आत्मा अन्तर्यामी परब्रह्म नारायण हैं ॥३॥ अन्यत्र भी लिखा है कि—

॥ पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्।

उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥

ऋग्वे० अष्ट० ८ मण्ड० १० अध्या० ४ अनुवा० ७ सूक्त० ९० मं० २॥ जो यह वर्तमान संसार है और जो बीता हुआ अतीत जगत् है तथा आनेवाला भविष्य संसार है वह सब परब्रह्म नारायण का शरीर होने से पुरुषशब्दवाच्य परब्रह्म नारायण ही हैं और नित्यमुक्तों के नियन्ता खाद्यपदार्थ के साथ जो अपने कारणों का अतिक्रमण करके देव मनुष्यस्थावरादिरूप से उत्पन्न होता है ॥२॥

पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥५॥

॥ सामवे० पूर्वार्चि० प्रपाठ० ६ अर्धप्रपा० १३ सूक्त० मं० ५॥

जो उत्पन्न हुआ और जो उत्पन्न होनेवाला और जो अन्न के सम्बन्ध से अत्यन्त बढ़ता है, उस इस समस्त संसार को अविनाशी मोक्षसुख का अधिष्ठाता स्वामी सत्य गुण कर्म स्वभावों से परिपूर्ण परब्रह्म नारायण निश्चय करके है ॥५॥६॥

पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येश्वरो यदन्येनाभवत् सह ॥

अथर्ववे कां० १६ अनुवा० १ सूक्त० ६ मं० ४॥ जो यह वर्तमान जगत् है और अतीत संसार है तथा आनेवाला भविष्य संसार है वह सब पुरुषात्मक है और जो सायुज्यादिक चतुर्विधमोक्षप्रदाता स्वामी अन्य के साथ प्रादुर्भूत हुआ है ॥४॥ इस मंत्र में "एव" का अर्थ निश्चय कैसे होता है। इसका उत्तर यह है कि—

तमेव विदित्वातिमृत्युमेति ॥ यजुर्वे० अ० ३१ मं० १८॥

उस श्रीमन्नारायण भगवान् को निश्चय जानकर यह चेतन मृत्यु को अतिक्रमण करता है ॥१८॥

मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।

॥ भगवद्गीता अ० ७ श्लो० १४॥

जो पुरुष केवल मुझको ही निरन्तर शरणागति करते हैं वे



इस माया को तर जाते हैं ॥१४॥ श्रुति-स्मृति के इन प्रमाणों से "एव" का अर्थ निश्चय निर्धारण होता है। परब्रह्मनारायणात्मक सब चर अचर हैं, ऐसा यदि न माना जाय तो अधोलिखित वाक्यों में असामञ्जस्य हो जायेगा।

॥ छायातपौ ब्रह्मविदो वदन्ति ॥ कठो० अ० १ वल्ली० ३ श्रु० १ ॥

ब्रह्मवेता लोग एक को छाया और दूसरे को आतप कहते हैं ॥१॥

द्वा सुपर्णा सयुजा सखाया ॥ मुण्डक० ३ खं० १ श्रु० १॥

दो चेतन जीवात्मा और परमात्मा एक साथ मिलकर मित्रता पूर्वक रहते हैं ॥१॥

ज्ञाज्ञौ द्वावजावीशानीशा वजा ह्येका भोक्तृ भोगार्थयुक्ता

श्वेताश्व० अध्या० १ श्रु० ९ ॥

भोक्ता भोग्यं प्रेरितारं च मत्वा ॥१२॥

दो चेतन अजन्मा हैं एक सर्वज्ञ और ईश है तथा दूसरा अल्पज्ञ और अनीश है और निश्चय करके भोक्तृभोगार्थयुक्ता तीसरी एक माया अजन्मा है ॥९॥ भोक्ता तथा भोग्य और प्रेरिता को मान कर मुक्त होता है ॥१२॥

प्रकृतिं पुरुषंचैव विद्ध्यनादी उभावपि

॥ भगवद्गी० अ० १३ श्लो० ॥१९॥

